तस्माज्ज्योतिरभूद् द्वेधा राधामाधव रूपकम्।
तस्मादिदं महादेवि ! गोपालेनैव भाषितम्।।
दुर्वाससो मुनेर्मोहे कार्त्तिक्यां रासमण्डले।
ततः पृष्टवती राधा सन्देहं भेदमात्मनः।।
निरंजनात्समुत्पन्नं मयाधीतं जगन्मयि।
श्रीकृष्णेन ततः प्रोक्तं राधायै नारदाय च।
ततो नारदतः सर्वे विरला वैष्णवास्तथा।
कलौ जानन्ति देवेशि, गोपनीयं प्रयत्नतः।।
शठाय कृपणायाथ दाम्भिकाय सुरेश्वरि।
ब्रह्महत्यामवाप्नोति तस्माद् यत्नेन गोपयेत्।।

ॐ अस्य श्रीगोपाल सहस्रनामस्तोत्रमन्त्रस्य। श्रीनारद ऋषिः। अनुष्टुप छन्दः। श्रीगोपालो देवता। कामोबीजम्। माया शक्तिः। चन्द्रः कीलकम्। श्रीकृष्णचन्द्र भक्तिरूप फल प्राप्तये श्रीगोपाल सहस्रनाम स्तोत्र जपे विनियोगः।

ॐ ऐं क्लीं बीजम्। श्रीं ह्रीं शक्तिः। श्रीवृन्दावन निवासः कीलकम्। श्रीराधाप्रियं परं ब्रह्मेति मन्त्रः। धर्मादि चतुर्विध पुरुषार्थ सिद्धयर्थे जपे विनियोगः।।

ऋष्यादि न्यासः—

शिरसि ॐ नारद ऋषये नमः। मुखे ॐ अनुष्टुप छन्दसे नमः हृदये ॐ गोपाल देवतायै नमः। नाभौ क्लीं कीलकाय नमः। गुह्ये ह्रीं शक्तये नमः। पादयोः श्रींकीलकाय नमः। क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा। इति मूल मन्त्रः।



करन्यासः—

ॐ क्लां अंगुष्ठाभ्यां नमः। ॐ क्लीं तर्जनीभ्यां नमः। ॐ क्लूं मध्यमाभ्यां नमः। ॐ क्लैं अनामिकाभ्यां नमः। ॐ क्लौं कनिष्ठकाभ्यां नमः। ॐ क्लः करतल करपृष्ठाभ्यां नमः।

हृदयादिन्यासः—

ॐ क्लां हृदयाय नमः। ॐ क्लीं शिरसे स्वाहाः। ॐ क्लूं शिखायै वषट्। ॐ क्लैं कवचाय हुम्। ॐ क्लौं नेत्राभ्यां वौषट्, ॐ क्लः अस्त्राय फट्।

मूलमन्त्रन्यासः—

क्लीं अंगुष्ठाभ्यां नमः। कृष्णाय तर्जनीभ्यां नमः। गोविन्दाय मध्यमाभ्यां नमः। गोपीजन अनामिकाभ्यां नमः। वल्लभाय कनिष्ठिकाभ्यां नमः। स्वाहा करतल कर पृष्ठाभ्यां नमः।

हृदयादिन्यासः—

क्लीं हृदयाय नमः। कृष्णाय शिरसे स्वाहा। गोविन्दाय शिखायै वषट्। गोपीजन कवचाय हुम्। वल्लभाय नेत्राभ्यां वौषट्। स्वाहा अस्त्राय फट्।।

।। ध्यानम्।।

कस्तूरीतिलकं ललाटपटले वक्षःस्थले कौस्तुभं,
नासाग्रे वरमौक्तिकं[1] करतले वेणुः करे कंकणम्।
सर्वांगे हरिचन्दनं सुललितं कण्ठे च मुक्तावली,
गोपस्त्री परिवेष्टितो विजयते गोपाल चूड़ामणिः।।१।।

१. 'गजमौक्तिकं' पाठभेदः

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं,
श्रीवत्सांकमुदारकौस्तुभधरं पीताम्बरं सुन्दरम्।।
गोपीनां नयनोत्पलार्चिततनुं गो-गोप-संघावृतं।
गोविन्दं कलवेणुवादनपरं दिव्यांगभूषं भजे।।२।।

अथ श्रीगोपाल सहस्रनाम

(ॐ) क्लीं देवः कामदेवः कामबीज शिरोमणिः।
श्रीगोपालो महीपालः सर्ववेदांग[1] पारगः।।१।।
धरणीपालको धन्यः पुण्डरीकः सनातनः।
गोपतिर्भूपतिः शास्ता प्रहर्त्ता विश्वतोमुखः।।२।।
आदिकर्त्ता महाकर्त्ता महाकालः प्रतापवान्।
जगज्जीवो जगद्धाताजगद्भर्त्ता जगद्वसुः।।३।।
मत्स्योभीमः कुहूभर्त्ता हर्त्ता वाराह मूर्त्तिमान्।
नारायणो हृषीकेशो गोविन्दो गरुडध्वजः।।४।।
गोकुलेन्द्रो महीचन्द्रः शर्वरीप्रियकारकः।
कमलामुखलोलाक्षः पुण्डरीकः शुभावहः।।५।।
दुर्वासा कपिलो भौमः सिन्धुसागरसंगमः।
गोविन्दो गोपतिर्गोत्रः कालिन्दीप्रेमपूरकः।।६।।
गोपस्वामी[2] गोकुलेन्द्रो गोवर्धनवरप्रदः।
नन्दादि गोकुलत्राता[3] दाता दारिद्र्यभंजनः।।७।।
सर्वमंगलदाता च सर्व कामप्रदायकः।
आदिकर्त्ता महीभर्त्ता सर्वसागर सिन्धुजः।।८।।

१. 'वेद'
२. 'गोस्वामी' ३. 'गोकुलेन्द्रश्च', पाठभेदाः



गजगामी गजोद्धारीकामीकामकलानिधिः।
कलंकरहितश्चन्द्रो बिम्बास्योबिम्बसत्तमः।।६।।
मालाकारः कृपाकारः कोकिलास्वर भूषणः
रामो नीलाम्बरो देवो हली दुर्दममर्दनः[1]।।१०।।
सहस्राक्षपुरीभेत्ता महामारीविनाशनः।
शिवः शिवतमो भेत्ता बलाराति प्रपूजितः।।११।।
कुमारी वरदायी च वरेण्यो मीनकेतनः।
नरो नारायणो धीरो राधापतिरुदारधीः।।१२।।
श्रीपतिः श्रीनिधिः श्रीमान् मापतिः पतिराजहा।
वृन्दापतिः कुलग्रामी धामी ब्रह्म सनातनः।।१३।।
रेवतीरमणोरामः चञ्चलश्चारुलोचनः।
रामायणो[2] शरीरोऽयं रामी रामःश्रियःपतिः।।१४।।
शर्वरः शर्वरी सर्वः सर्वत्र शुभदायकः।
राधाराधयितो राधी राधाचित्त प्रमोदकः।।१५।।
राधारतिसुखोपेतो राधामोहन तत्परः।
राधावशीकरो राधा हृदयाम्भोजषट्पदः।।१६।।
राधालिंगन सम्मोहो राधानर्त्तन कौतुक।
राधासंजात संप्रीतो राधाकाम्यफलप्रदः।।१७।।
वृन्दापतिः कोकनिधिः कोकशोक विनाशनः।
चन्द्रापतिश्चन्द्रपतिश्चण्डकोदण्डभञ्जनः।।१८।।
रामो दाशरथी रामो भृगुवंशसमुद्भवः।
आत्मारामो जितक्रोधो मोहो मोहान्धभञ्जनः।।१९।।

१. दुर्दमः
२. रामायण, पाठभेदाः

वृषभानुर्भवो भाव:[1] काश्यपिः करुणानिधिः।
कोलाहलो हली हाली हेली हलधरप्रियः।।२०।।
राधामुखाब्ज मार्त्तण्डो भास्करो रविजो विधुः।
विधिर्विधाता वरुणो वारुणो वारुणीप्रियः।।२१।।
रोहिणी हृदयानन्दी वसुदेवात्मजो बली।
नीलाम्बरो रोहिणेयो जरासन्धवधोऽमलः।।२२।।
नागोनवाम्भो विरहो[2] वीरहा वरदोवली।
गोपथो विजयी विद्वान् शिपिविष्ट सनातनः।।२३।।
परशुरामवचोग्राही वरग्राही शृगालहा।
दमघोषोपदेष्टा च रथग्राही सुदर्शनः।।२४।।
वीरपत्नीयशस्त्राता जराव्याधिविघातकः।
द्वारकावासतत्त्वज्ञो हुताशनवरप्रदः।।२५।।
यमुनावेगसंहारी नीलाम्बरधरः प्रभुः।
विभुः शरासनो धन्वी गणेशो गणनायकः।।२६।।
लक्ष्मणो लक्षणो लक्ष्यो रक्षोवंश विनाशनः।
वामनो वामनी भूतोऽवामनो वमनारुहः।।२७।।
यशोदानन्दनः कर्त्ता यमलार्जुनमुक्तिदः।
उलूखली महामानी[3] दामबद्धाह्वयी शमी।।२८।।
भक्तानुकारी भगवान् केशवोऽचलधारकः।
केशिहा मधुहा मोही वृषासुर विघातक।।२९।।
अघासुर विनाशी च पूतनामोक्षदायकः।
कुब्जा विनोदी भगवान् कंसमृत्युर्महामखी।।३०।।

१. भावी
२. विरुदो
३. मानो



अश्वमेधो वाजपेयो गोमेधो नरमेधवान्।
कन्दर्पकोटि लावण्यश्चन्द्र कोटि सुशीतलः।।३१।।
रविकोटि प्रतीकाशो वायुकोटि महाबलः।
ब्रह्मा ब्रह्माण्डकर्त्ता च कमलावांछितप्रदः।।३२।।
कमली कमलाक्षश्च कमलामुखलोलुपः।
कमलाव्रतधारी च कमलाभः[1] पुरन्दरः।।३३।।
सौभाग्याधिक चित्तोऽयं महामायी महोत्कटः।
तारकारिः सुरत्राता मारीचक्षोभकारकः।।३४।।
विश्वामित्र प्रियोदान्तो रामो राजीवलोचनः।
लंकाधिपकुलध्वंसी विभीषणवरप्रदः।।३५।।
सीतानन्दकरो रामो वीरो वारिधिबन्धनः।
खरदूषणसंहारी साकेतपुरवासनः।।३६।।
चन्द्रावलीपतिः कूलः केशीकंसवधोऽमलः[2]।
माधवो मधुहा माध्वी माध्वीक माधवी मधुः[3]।।३७।।
मुञ्जाटवीगाहमानो धेनुकारिर्धरात्मजः।
वंशीवटविहारी च गोवर्धनवनाश्रयः।।३८।।
तथा तालवनोद्देशी भाण्डीरवनशंखहा।
तृणावर्त-कथाकारी वृषभानुसुतापतिः।।३९।।
राधा प्राणसमोराधा वदनाब्ज मधुव्रतः।
गोपीरंजन दैवज्ञो लीलाकमल पूजितः।।४०।।
क्रीड़ाकमलसन्दोहो गोपिका प्रीतिरंजनः।
रंजको रंजनो रंगो रंगी रंग महीरुहः।।४१।।

१. कमलाक्षः
२. ऽमरः
३. विभुः

कामः कामारि भक्तोऽयं पुराणपुरुषः कविः।
नारदो देवलोभीमोबालो बालमुखांबुजः।।४२।।
अम्बुजो ब्रह्मसाक्षी च योगीदत्त वरोमुनिः।
ऋषभः पर्वतोग्रामो नदी-पवन-वल्लभः।।४३।।
पद्मनाभः सुरज्येष्ठो ब्रह्मारुद्रोऽहि भूषितः।
गणानांत्राणकर्त्ता च गणेशोग्रहिलो ग्रही।।४४।।
गणाश्रयो गणाध्यक्षः क्रोड़ीकृत जगत्त्रयः।
यादवेन्द्रो द्वारकेन्द्रो मथुरावल्लभो धुरी।।४५।।
भ्रमरः कुन्तलीकुन्ती सुतरक्षी महामखी।
यमुनावरदाता च काश्यपस्य[1] वरप्रदः।।४६।।
शंखचूड़वधोद्दामी गोपीरक्षण तत्परः।
पाञ्चजन्यकरो रामी त्रिरामी वनजोजयः।।४७।।
फाल्गुनः फाल्गुनसखो विराधवधकारकः।
रुक्मिणीप्राणनाथश्च सत्यभामाप्रियंकरः।।४८।।
कल्पवृक्षो महावृक्षो दानवृक्षो महाफलः।
अंकुशो भूसुरो भामो भामको भ्रामको हरिः।।४९।।
सरलः शाश्वतो वीरो यदुवंशी शिवात्मकः।
प्रद्युम्नो बलकर्त्ता च प्रहर्त्ता दैत्यहाप्रभुः।।५०।।
महाधनो महावीरो वनमाला विभूषणः।
तुलसीदाम शोभाढ्यो जालन्धरविनाशनः।।५१।।
शूरः सूर्यो मृकण्डश्च भास्करो विश्वपूजितः।
रविस्तमोहावह्निश्च वाडवो वडवानलः।।५२।।
दैत्यदर्प-विनाशी च गरुड़ो गरुड़ाग्रजः।
गोपीनाथो महीनाथो वृन्दानाथोऽवरोधकः।।५३।।

१. कश्यपस्य



प्रपंचीं पंचरूपश्च लतागुल्मश्चगोपतिः।
गंगा च यमुना रूपो गोदावेत्रवती तथा।।५४।।
कावेरी नर्मदा तापी गण्डकी सरयूस्तथा।
राजसस्तामसः सत्वी सर्वांगी सर्वलोचनः।।५५।।
सुधामयोऽमृतमयो योगिनीवल्लभः शिवः।
बुद्धो बुद्धिमतां श्रेष्ठो विष्णुर्जिष्णुः शचीपतिः।।५६।।
वंशी वंशधरो लोको विलोको मोहनाशनः।
रव रावो रवो रावो बलोबालबलाहकः।।५७।।
शिवो रुद्रो नलो नीलो लांगलो लांगलाश्रयः।
पारदः पावनो हंसो हंसारूढ़ो जगत्पतिः।।५८।।
मोहिनीमोहनो मायो महामायो महामखी।
वृषो वृषाकपिः कालः कालीदमन कारकः।।५९।।
कुब्जा-भाग्यप्रदो वीरो रजकक्षय कारकः।
कोमलो वारुणो राजा जलजो जलधारकः।।६०।।
हारकः सर्वपापघ्न परमेष्ठी पितामहः।
खंगधारी कृपाकारी राधारमण सुन्दरः।।६१।।
द्वादशारण्य-सम्भोगी शेषनागफणालयः।
कामः श्यामः सुखः श्रीदः श्रीपतिः श्रीनिधिः कृतिः।।६२।।
हरिर्हरो नरो नारो नरोत्तम इषुप्रियः।
गोपाली चित्तहर्त्ता च कर्त्ता संसार तारकः।।६३।।
आदिदेवो महादेवो गौरीगुरुरनाश्रयः।
साधुर्मधुर्विधुर्धाता त्राताऽक्रूरपरायणः।।६४।।
रोलम्बी च हयग्रीवो वानरारिर्वनाश्रयः।
वनं वनी वनाध्यक्षो महावन्द्यो महामुनिः।।६५।।

स्यमन्तक-मणिप्राज्ञो विज्ञो विघ्नविघातकः।
गोवर्द्धनो वर्द्धनीयो वर्द्धनी वर्द्धनप्रियः।।६६।।
वर्द्धन्यो वर्द्धनो वर्द्धी वर्द्धिष्णुः सुमुखप्रियः।
वर्द्धितो वृद्धको वृद्धो वृन्दारकजनप्रियः।।६७।।
गोपाल रमणीभर्त्ता साम्बकुष्ठविनाशकः।
रुक्मिणीहरणः प्रेम प्रेमी चन्द्रावलीपतिः।।६८।।
श्रीकर्त्ता विश्वभर्त्ता च नरो नारायणो बली।
गणोगणपतिश्चैव दत्तात्रेयो महामुनिः।।६६।।
व्यासो नारायणो दिव्यो भव्यो भावुक धारकः।
स्वः श्रेयसः शिवं भद्रं भावुकं भाविकं शुभम्।।७०।।
शुभात्मकः शुभः शास्ता प्रशास्ता मेघनादहा।
ब्रह्मण्यदेवो दीनानामुद्धारकरणक्षमः।।७१।।
कृष्णः कमलपत्राक्षः कृष्णः कमललोचनः।
कृष्णः कामी सदा कृष्णः समस्तप्रियकारकः।।७२।।
नन्दो नन्दी महानन्दी मादी मादनकः किली।
मिली हिली गिली गोली गोलो गोलालयोऽगुली।।७३।।
गुग्गुली मारकी शाखी वटः पिप्पलकः कृती।
म्लेच्छहा कालहर्त्ता च यशोदा यश एव च।।७४।।
अच्युतः केशवो विष्णुर्हरिः सत्यो जनार्दनः।
हंसो नारायणो नीलो, लीनो भक्तिपरायणः।।७५।।
जानकी वल्लभो रामो विरामो विघ्ननाशनः।
सहस्रांशुर्महाभानुर्वीरबाहुर्महोदधिः।।७६।।
समुद्रोऽब्धिः कूपारः पारावारः सरित्पतिः।
गोकुलानन्दकारी च प्रतिज्ञा परिपालकः।।७७।।



सदारामः कृपारामो महारामो धनुर्धरः।
पर्वतः पर्वताकारो गयो गेयो द्विजप्रियः।।७८।।
कम्बलाश्वतरो रामो रामायणप्रवर्त्तकः।
द्यौर्दिवो दिवसो दिव्यो भव्यो भाविभयापहः।।७६।।
पार्वती भाग्यसहितो भर्त्ता-लक्ष्मी विलासवान्।
विलासी साहसी सर्वी गर्वी गर्वितलोचनः।।८०।।
मुरारिर्लोकधर्मज्ञो जीवनो जीवनान्तकः।
यमो यमादिर्यमनो यामी याम-विधायकः।।८१।।
वंशुलीः पांशुलीः पांसुः पाण्डुरर्जुन-वल्लभः।
ललिता चन्द्रिका माला माली मालाम्बुजाश्रयः।।८२।।
अम्बुजाक्षो महायक्षो दक्षश्चिन्तामणिः प्रभुः।
मणिर्दिदिनमणिश्चैव केदारो बदरीश्रयः।।८३।।
बदरीवन सम्प्रीतो व्यासः सत्यवती-सुतः।
अमरारिनिहन्ता च सुधासिन्धुर्विधूदयः।।८४।।
चन्द्रो रविः शिवः शूली चक्री चैव गदाधरः।
श्रीकर्त्ता श्रीपतिः श्रीदः श्रीदेवो देवकीसुतः।।८५।।
श्रीपतिः पुण्डरीकाक्षः पद्मनाभो जगत्पतिः।
वासुदेवोऽप्रमेयात्मा केशवो गरुड़ध्वजः।।८६।।
नारायणः परं धाम देवदेवो महेश्वरः।
चक्रपाणिः कलापूर्णो वेदवेद्यो दयानिधिः।।८७।।
भगवान् सर्वभूतेशो गोपालः सर्वपालकः।
अनन्तो निर्गुणोऽनन्तो निर्विकल्पो निरंजनः।।८८।।
निराधारो निराकारो निराभासो निराश्रयः।
पुरुषः प्रणवातीतो मुकुन्दः परमेश्वरः।।८६।।

क्षणावनिः सार्वभौमो वैकुण्ठो भक्तवत्सलः ।
विष्णुर्दामोदरः कृष्णो माधवो मथुरापतिः ।।६० ।।
देवकीगर्भसम्भूतो यशोदावत्सलो हरिः ।
शिवः संकर्षणः शम्भुर्भूतनाथो दिवस्पतिः ।।६१ ।।
अव्ययः सर्वधर्मज्ञो निर्मलोनिरुपद्रवः ।
निर्वाणनायको नित्यो नीलजीमूत सन्निभः ।।६२ ।।
कलाक्षयश्च सर्वज्ञः कमलारूपतत्परः ।
हृषीकेशः पीतवासा वसुदेवप्रियात्मजः ।।६३ ।।
नन्दगोपकुमारार्यो नवनीताशनः प्रभुः ।
पुराणपुरुषः श्रेष्ठः शंखपाणिः सुविक्रमः ।।६४ ।।
अनिरुद्धश्चक्ररथः शार्ङ्गपाणिश्चतुर्भुजः ।
गदाधरः सुरार्त्तिघ्नो गोविन्दो नन्दकायुधः ।।६५ ।।
वृन्दावनचरः शौरिर्वेणुवाद्यविशारदः ।
तृणावर्त्तान्तको भीम साहसो बहुविक्रमः ।।६६ ।।
शकटासुर-संहारी बकासुर-विनाशनः ।
धेनुकासुर-संहारी पूतनारिर्नृकेसरी ।।६७ ।।
पितामहो गुरुः साक्षी प्रत्यगात्मा सदाशिवः ।
अप्रमेयप्रभुः प्राज्ञोऽप्रतर्क्यः स्वप्नवर्द्धनः ।।६८ ।।
धन्यो मान्यो भवो भावो धीरः शान्तो जगद्गुरुः ।
अन्तर्यामीश्वरो दिव्यो दैवज्ञो देवता गुरुः ।।६९ ।।
क्षीराब्धिशयनो धाता लक्ष्मीवान् लक्ष्मणाग्रजः ।
धात्रीपतिरमेयात्मा चन्द्रशेखर पूजितः ।।१०० ।।
लोकसाक्षी जगच्चक्षुः पुण्यचारित्र कीर्त्तनः ।
कोटिमन्मथ-सौन्दर्यो जगन्मोहनविग्रहः ।।१०१ ।।



मन्दस्मिततमो गोपो गोपिका-परिवेष्टितः ।
फुल्लारविन्दनयनश्चाणूरांघ्रिनिषूदन ।।१०२ ।।
इन्दीवरदलश्यामो बर्हीबर्हावतंसकः ।
मुरलीनिनादाह्लादो दिव्य माल्याम्बरावृतः ।।१०३ ।।
सुकपोलयुगः सुभ्रुर्युगलः सुललाटकः ।
कम्बुग्रीवो विशालाक्षो लक्ष्मीवान् शुभलक्षणः ।।१०४ ।।
पीनवक्षाश्चतुर्बाहुश्चतुर्मूर्तिस्त्रिविक्रमः ।
कलंकरहितः शुद्धो दुष्ट शत्रुनिवर्हणः ।।१०५ ।।
किरीटिकुण्डलधरः कटकांगदमण्डितः ।
मुद्रिकाभरणोपेतः कटिसूत्रविराजितः ।।१०६ ।।
मञ्जीररञ्जितपदः सर्वाभरणभूषितः ।
विन्यस्तपादयुगलो दिव्य मंगल विग्रहः ।।१०७ ।।
गोपिकानयनानन्दः पूर्णचन्द्रनिभाननः ।
समस्त जगदानन्दः सुन्दरो लोकनन्दनः ।।१०८ ।।
यमुनातीरसञ्चारी राधामन्मथवैभवः ।
गोपनारीप्रियो दान्तो गोपीवस्त्रापहारकः ।।१०९ ।।
शृंगारमूर्त्तिः श्रीदामा[1]तारको मूलकारणः ।
सृष्टिसंरक्षणोपायः क्रूरासुरविभञ्जनः ।।११० ।।
नरकासुरसंहारी मुरारिर्वैरिमर्दनः ।
आदितेयप्रियो दैत्यभीकरश्चेन्दुशेखरः ।।१११ ।।
जरासन्धकुलध्वंसी कंसाराति सुविक्रमः ।
पुण्यश्लोकः कीर्त्तनीयो यादवेन्द्रो जगन्नुतः ।।११२ ।।
रुक्मिणीरमणः सत्यभामा-जाम्बवतीप्रियः ।
मित्रविन्दानाग्नजितीलक्ष्मणासमुपासितः ।।११३ ।।

१. श्रीधामा

सुधाकरकुलेजातोऽनन्तः प्रबल-विक्रमः।
सर्व सौभाग्य सम्पन्नो द्वारिकायामुपस्थितः।।११४।।
भद्रा सूर्यसुतानाथो लीलामानुषविग्रहः।
सहस्रषोडशस्त्रीशो भोगमोक्षैकदायकः।।११५।।
वेदान्त वेद्यः संवेद्यो वेद्यो ब्रह्माण्डनायकः।
गोवर्धनधरोनाथः सर्वजीवदयापरः।।११६।।
मूर्त्तिमान् सर्वभूतात्मा आर्त्तत्राणपरायणः।
सर्वज्ञः सर्वसुलभः सर्वशास्त्रविशारदः।।११७।।
षडगुणैश्वर्य सम्पन्नः पूर्णकामो धुरन्धरः।
महानुभावः कैवल्यदायको लोकनायकः।।११८।।
आदिमध्यान्तरहितः शुद्ध सात्विक विग्रहः।
असमानः समस्तात्मा शरणागतवत्सलः।।११६।।
उत्पत्तिस्थितिसंहारकारणं सर्वकारणम्।
गम्भीरः सर्वभावज्ञः सच्चिदानन्दविग्रहः।।१२०।।
विष्वक्सेनः सत्यसन्धः सत्यवान्सत्यविक्रमः।
सत्यव्रतः सत्यसंज्ञः सर्वधर्मपरायणः।।१२१।।
आपन्नार्तिप्रशमनो द्रौपदीमानरक्षकः।
कन्दर्पजनकः प्राज्ञो जगन्नाटकवैभवः।।१२२।।
भक्तिवश्योगुणातीतः सर्वैश्वर्यप्रदायकः।
दमघोषसुतद्वेषी बाणबाहुविखण्डनः।।१२३।।
भीष्मभक्तिप्रदो दिव्यः कौरवान्वयनाशनः।
कौन्तेयप्रियबन्धुश्च पार्थस्यन्दनसारथिः।।१२४।।
नारसिंहो महावीरः स्तम्भजातो महाबलः।
प्रह्लादवरदः सत्यो देव पूज्योऽभयंकरः।।१२५।।



उपेन्द्रइन्द्रवरदो वामनो बलिबन्धनः।
गजेन्द्रवरदः स्वामी सर्वदेवनमस्कृतः।।१२६।।
शेषपर्यंकशयनो वैनतेयो रथोजयी।
अव्याहतबलैश्वर्यसम्पन्नः पूर्णमानसः।।१२७।।
योगेश्वरेश्वरः साक्षी क्षेत्रज्ञो ज्ञान-दायकः।
योगिहृत्पंकजावासो योगमायासमन्वितः।।१२८।।
नादबिन्दु कलातीतश्चतुर्वर्गफलप्रदः।
सुषुम्नामार्गसंचारी देहस्यान्तरसंस्थितः।।१२६।।
देहेन्द्रियमनः प्राण साक्षी चेतः प्रसादकः।
सूक्ष्मः सर्वगतो देही ज्ञानदर्पणगोचरः।।१३०।।
तत्वत्रयात्मकोऽव्यक्तः कुण्डलीसमुपाश्रितः।
ब्रह्मण्यः सर्वधर्मज्ञः शान्तो दान्तो गतक्लमः।।१३१।।
श्रीनिवासः सदानन्दो विश्वमूर्त्तिर्महाप्रभुः।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।।१३२।।
समस्तभुवनाधारः समस्तप्राणरक्षकः।
समस्त सर्वभावज्ञो गोपिकाप्राणवल्लभः।।१३३।।
नित्योत्सवो नित्यसौख्यो नित्यश्रीर्नित्यमंगलः।
व्यूहार्चितो जगन्नाथः श्रीवैकुण्ठपुराधिपः।।१३४।।
पूर्णानन्दघनीभूतो गोपवेषधरो हरिः।
कलाप कुसुमश्यामः कोमलः शान्तविग्रहः।।१३५।।
गोपांगनावृतोऽनन्तो वृन्दावनसमाश्रयः।
वेणुवादरतः श्रेष्ठो देवानां हितकारकः।।१३६।।
बालक्रीड़ासमासक्तो नवनीतस्य तस्करः।
गोपाल कामिनीजारश्चौरजारशिखामणिः।।१३७।।

परं ज्योतिः पराकाशः परावासः परिस्फुटः।
अष्टादशाक्षरो मन्त्रो व्यापको लोकपावनः।।१३८।।
सप्तकोटिमहामन्त्रशेखरो देवशेखरः।
विज्ञानज्ञानसन्धानस्तेजोराशिर्जगत्पतिः।।१३६।।
भक्तलोकप्रसन्नात्मा भक्तमन्दारविग्रहः।
भक्तदारिद्र्य-दमनो भक्तानां प्रीतिदायकः।।१४०।।
भक्ताधीनमनाः पूज्यो भक्तलोकशिवंकरः।
भक्ताभीष्टप्रदः सर्वभक्ताघौघनिकृन्तनः।।१४१।।
अपार करुणासिन्धुर्भगवान् भक्ततत्परः।।१४२।।

## माहात्म्य

इति श्रीराधिकानाथ सहस्रनाम कीर्त्तनम्।
स्मरणात्पापराशिनांखण्डनं मृत्युनाशनम्।।१।।
वैष्णवानां प्रियकरं महारोग-निवारणम्।
ब्रह्महत्या सुरापानं परस्त्रीगमनं तथा।।२।।
परद्रव्यापहरणम् परद्वेष-समन्वितम्।
मानसं वाचिकं कायं यत्पापं पापसम्भवम्।।३।।
सहस्रनाम पठनात्सर्वं नश्यति तत्क्षणात्
महादारिद्र्ययुक्तो यो वैष्णवो विष्णुभक्तिमान्।।४।।
कार्त्तिक्यां सम्पठेद्रात्रौ शतमष्टोत्तरं क्रमात्।
पीताम्बरधरो धीमान्सुगन्धिपुष्पचन्दनैः।।५।।
पुस्तकं पूजयित्वा तु नैवेद्यादिभिरेव च।
राधाध्यानांकितो धीरः वनमाला विभूषितः।।६।।



शतमष्टोत्तरं देवि पठेन्नाम सहस्रकम्।
चैत्र शुक्ले च कृष्णे च कुहू संक्रान्तिवासरे।।७।।
पठितव्यं प्रयत्नेन त्रैलोक्यं मोहयेत् क्षणात्।
तुलसीमालया युक्तो वैष्णवो भक्तितत्परः।।८।।
रविवारे च शुक्रे च द्वादश्यां श्राद्धवासरे।
ब्राह्मणं पूजयित्वा च भोजयित्वा विधानतः।।६।।
पठेन्नामसंहस्रच ततः सिद्धिः प्रजायते।
महानिशायां सततं वैष्णवो यः पठेत्सदा।।१०।।
देशान्तरगता लक्ष्मीः समायाति न संशयः।
त्रैलोक्ये च महादेवी सुन्दर्यः काममोहिताः।।११।।
मुग्धाः स्वयं समायान्ति वैष्णवश्च भजन्तिताः।
रोगी रोगात्प्रमुच्येत बद्धो मुच्येत बन्धनात्।।१२।।
गुर्विणी जनयेत्पुत्रं कन्या विन्दति सत्पतिम्।
राजानो वश्यतां यान्ति किं पुनः क्षुद्रमानवाः।।१३।।
सहस्रनाम श्रवणात् पठनात्पूजनात् प्रिये।
धारणात्सर्वमाप्नोति वैष्णवो नात्र संशयः।।१४।।
वंशीवटे चान्यवटे तथा पिप्पलकेऽथवा।
कदम्बपादपतले गोपालमूर्तिसन्निधौ।।१५।।
यः पठेद्वैष्णवो नित्यं स याति हरिमन्दिरम्।
कृष्णेनोक्तं राधिकायै मयि प्रोक्तं पुरा शिवे।।१६।।
नारदाय मया प्रोक्तं नारदेन प्रकाशितम्।
मया त्वयि वरारोहे प्रोक्तमेतत्सुदुर्लभम्।।१७।।
गोपनीयं प्रयत्नेन न प्रकाश्यं कथञ्चन।
शठाय पापिने चैव लम्पटाय विशेषतः।।१८।।

न दातव्यं, न दातव्यं, न दातव्यं कदाचन।
देयं शिष्याय शान्ताय विष्णुभक्तिरताय च।।१६।।
गोदान ब्रह्मयज्ञादेवी जपेय शतस्य च।
अश्वमेध सहस्रस्य फलं पाठे भवेद्ध्रुवम्।।२०।।
मोहनं स्तम्भनं चैव मारणोच्चाटनादिकम्।
यद्यद्वाञ्छति चित्तेन तत्तत्प्राप्नोति वैष्णवः।।२१।।
एकादश्यां नरः स्नात्वा सुगन्धिद्रव्यतैलकैः।
आहारं ब्राह्मणे दत्त्वा दक्षिणां स्वर्णभूषणम्।।२२।।
तत आरम्भ कर्त्ताऽस्य सर्वं प्राप्नोति मानवः।
शतावृत्तं सहस्रञ्च यः पठेद्वैष्णवो जनः।।२३।।
श्रीवृन्दावनचन्द्रस्य प्रसादात्सर्वमाप्नुयात्।
यद्गृहे पुस्तकं देवि पूजितं चैव तिष्ठति।।२४।।
न मारी न च दुर्भिक्षं नोपसर्गभयं क्वचित्।
सर्पादि भूतयक्षाद्या नश्यन्ति नात्र संशयः।।२५।।
श्रीगोपाल महादेवि वसेत्तस्य गृहे सदा।
गृहे यस्य सहस्रं च नाम्नां तिष्ठति पूजितम्।।२६।।

इति श्रीसम्मोहन महातन्त्रे गोपाल रहस्य, हरगौरी संवादे
श्रीगोपाल सहस्रनाम स्तोत्रं सम्पूर्णम्।





संस्थान में संरक्षित सम्मोहन तन्त्रोक्त श्रीगोपालसहस्रनाम की प्राचीन हस्तलिखित प्रति के प्रथम और अन्तिम पृष्ठ के चित्र।
अन्तिम पृष्ठ की पाँचवीं पंक्ति में लिपिकाल सम्वत् १६६९ स्पष्ट है।
(सातवीं पंक्ति के मध्य से अन्य ग्रन्थ आरम्भ हो जाता है)

# श्रीगोपाल अष्टोत्तरशत नामावली

१. ॐ श्रीकृष्णाय नमः।
२. ॐ कमलानाथाय नमः।
३. ॐ वासुदेवाय नमः।
४. ॐसनातनाय नमः
५. ॐ वसुदेवात्मजाय नमः।
६. ॐ पुण्याय नमः।
७. ॐ लीलामानुषविग्रहाय नमः।
८. ॐ श्रीवत्सकौस्तुभधराय नमः।
९. ॐ श्रीयशोदावत्सलाय नमः।
१०. ॐ हरये नमः
११. ॐ चतुर्भुजादिचक्रासिगदा शंखाद्युदायुधाय नमः।
१२. ॐ देवकीनन्दनाय नमः
१३. ॐ श्रीशाय नमः।
१४. ॐ नन्दगोपप्रियात्मजाय नमः।
१५. ॐ यमुनावेगसंहारिणे नमः।
१६. ॐ बलभद्रप्रियानुजाय नमः।
१७. ॐ पूतनाजीवितहराय नमः।
१८. ॐ शकटासुरभंजनाय नमः।

१९. ॐ नन्दव्रजजनानन्दाय नमः।
२०. ॐ सच्चिदानन्दविग्रहाय नमः।
२१. ॐ नवनीतविलिप्तांगाय नमः।
२२. ॐ नवनीतनटाय नमः।
२३. ॐ अनघाय नमः।
२४. ॐ नवनीतनवाहाराय नमः।
२५. ॐ मुचकुंदप्रसादकाय नमः।
२६. ॐ षोडशस्त्रीसहस्त्रेशाय नमः।
२७. ॐ स्त्रीभंगललिताकृतये नमः।
२८. ॐ शुकवागमृतबिन्दवे नमः।
२९. ॐ गोविन्दाय नमः।
३०. ॐ गोविदांपतये नमः।
३१. ॐ वत्सवाटकूचराय नमः।
३२. ॐ अनन्ताय नमः।
३३. ॐ धेनुकासुरखण्डनाय नमः।
३४. ॐ तृणीकृतस्तृणावर्त्ताय नमः।
३५. ॐ यमलार्जुनभंजनाय नमः।
३६. ॐ उत्तालतालभेत्रे नमः।
३७. ॐ तमालश्यामलाकृतये नमः।
३८. ॐ गोपगोपीश्वराय नमः।
३९. ॐ योगिने नमः
४०. ॐ कोटिसूर्यसमप्रभाय नमः।
४१. ॐ इलापतये नमः।



४२. ॐ परंज्योतिषे नमः।
४३. ॐ यादवेन्द्राय नमः।
४४. ॐ यदूद्वहाय नमः।
४५. ॐ वनमालिने नमः।
४६. ॐ पीतवाससे नमः।
४७. ॐ पारिजातापहारकाय नमः।
४८. ॐ गोवर्धनाचलोद्धर्त्रे नमः।
४९. ॐ गोपालाय नमः।
५०. ॐ सर्वपालकाय नमः।
५१. ॐ अजाय नमः।
५२. ॐ निरंजनाय नमः।
५३. ॐ कामजनकाय नमः।
५४. ॐ कंजलोचनाय नमः।
५५. ॐ मधुहाय नमः।
५६. ॐ मथुरानाथाय नमः।
५७. ॐ द्वारकानायकाय नमः।
५८. ॐ बलये नमः।
५९. ॐ वृन्दावनान्तसंचारिणे नमः।
६०. ॐ तुलसीदामभूषणाय नमः।
६१. ॐ मुष्टिकासुरचाणूरमदयुद्धविशारदाय नमः।
६२. ॐ संसारवैरिणे नमः।
६३. ॐ कंसारये नमः।
६४. ॐ मुरारये नमः।

६५. ॐ नरकान्तकाय नमः।
६६. ॐ स्यमन्तकमणिहर्त्रे नमः।
६७. ॐ नरनारायणात्मकाय नमः।
६८. ॐकुब्जाकृष्णाम्बरधराय नमः।
६६. ॐ मायिने नमः।
७०. ॐ परमपुरुषाय नमः।
७१. ॐ अनादि ब्रह्मचारिणे नमः।
७२. ॐ कृष्णावसनकर्षाकाय नमः।
७३. ॐ शिशुपालशिरच्छेत्रे नमः।
७४. ॐ दुर्योधनकुलान्तकाय नमः।
७५. ॐ विदूराक्रूरवरदाय नमः।
७६. ॐ विश्वरूपप्रदर्शकाय नमः।
७७. ॐ सत्यवादिने नमः।
७८. ॐ सत्यसंकल्पाय नमः।
७६. ॐ सत्यभामारताय नमः।
८०. ॐ जयिने नमः।
८१. ॐ सुभद्रापूर्वजाय नमः।
८२. ॐ ओजिष्णवे नमः।
८३. ॐ भीष्ममुक्तिप्रदायकाय नमः।
८४. ॐ जगद्गुरवे नमः।
८५. ॐ जगन्नाथाय नमः।
८६. ॐ वेणुनादविशारदाय नमः।
८७. ॐ वृषभासुरविध्वंसिने नमः।



८८. ॐ वाणासुरकरांतकाय नमः।
८६. ॐ युधिष्ठिरप्रतिष्ठात्रे नमः।
६०. ॐ बर्हिबर्हावतंसकाय नमः।
६१. ॐ पार्थसारथये नमः।
६२. ॐ अव्यक्ताय नमः।
६३. ॐ गीतामृतमहोदधये नमः।
६४. ॐ कालियफणिमाणिक्यरंजित श्रीपदाम्बुजाय नमः।
६५. ॐ दामोदराय नमः।
६६. ॐ यज्ञभोक्त्रे नमः।
६७. ॐ दानवेन्द्रविनाशाय नमः।
६८. ॐ नारायणाय नमः।
६६. ॐ परब्रह्मणे नमः।
१००. ॐ पन्नगाशनवाहनाय नमः।
१०१. ॐ जलक्रीडासमासक्त गोपीवस्त्रापहारकाय नमः।
१०२. ॐ पुण्यश्लोकाय नमः।
१०३. ॐ तीर्थपदाय नमः।
१०४. ॐ वेदवेद्याय नमः।
१०५. ॐ दयानिधये नमः।
१०६. ॐ सर्वभूतात्मकाय नमः।
१०७. ॐ सर्वग्रहरुपिणे नमः।
१०८. ॐ परात्पराय नमः।

इति श्रीगोपाल अष्टोत्तरशत नामावली सम्पूर्णम्।

# श्रीगोपाल ध्यानम्

सजलजलदनीलं दर्शितोदारशीलं
करतलधृतशैलं वेणुवाद्यैरसालम्।
व्रजजनकुलपालं कामिनीकेलिलोलं
तरुणतुलसिमालं नौमि गोपालबालम्।।

बालोऽयमालोल विलोचनेन
वक्त्रेण चित्रीकृतदिङ्मुखेन।
वेशेन घोषोचित भूषणेन
मुग्धेन दुग्धे नयनोत्सवं नः।

–लीलाशुक विल्वमंगल



# श्रीनन्दकुमाराष्टकम्

सुन्दर गोपालं उरवनमालं नयनविशालं दुःखहरम्।
वृन्दावनचन्द्रमानन्दकन्दं परमानन्दं धरणिधरम्।।
वल्लभघनश्यामं पूर्णकामम् अत्यभिरामं प्रीतिकरम्।
भज नन्दकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्मपरम्।।१।।

सुन्दरवारिजवदनं निर्जितमदनम् आनन्दसदनं मुकुटधरम्
गुञ्जाकृतिहारं विपिनविहारं परमोदारं चीरहरम्।।
वल्लभपटपीतं कृतउपवीतं करनवनीतं विबुधवरम्।
भज नन्दकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्मपरम्।।२।।

शोभित मुखधूलं यमुनाकूलं निपट अतूलं सुखदतरम्
मुखमण्डितरेणुं चारितधेनुं वादित वेणुं मधुरसुरम्।।
वल्लभमतिविमलं शुभपदकमलं नखरुचिअमलं तिमिरहरम्।
भज नन्दकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्मपरम्।।३।।

शिरमुकुटसुदेशं कुञ्चितकेशं नटवरवेशं कामवरम्।
मायाकृतमनुजं हलधरअनुजं प्रतिहतदनुजं भारहरम्।।
वल्लभव्रजपालं सुभगसुचालं हितमनुकालं भाववरम्।
भज नन्दकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्मपरम्।।४।।

इन्दीवरभासं प्रकटसुरासं कुसुमविकासं वंशिधरम्।
हृतमन्मथमानं रूपनिधानं कृतकलगानं चित्तहरम्।।
वल्लभमृदुहासं कुञ्जनिवासं विविध विलासं केलिकरम्।
भज नन्दकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्मपरम्।।५।।

अतिपर प्रवीणं पालित दीनं भक्ताधीनं कर्मकरम्।
मोहनमतिधीरं फणिबलवीरं हतपतवीरं तरलतरम्।।
वल्लभ ब्रजरमणं वारिजवदनं हलधरशमनं शैलधरम्।
भज नन्दकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्मपरम्।।६।।

जलधर द्युति अंगं ललितत्रिभंगं बहुकृतरंगं रसिकवरम्।
गोकुलपरिवारं मदनाकारं कुञ्जविहारं गूढतरम्।।
वल्लभव्रजचन्द्रं सुभगसुछन्दं कृतआनन्दं भ्रान्तिहरम्।
भज नन्दकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्मपरम्।।७।।

वन्दितयुगचरणं पावनकरणं जगदुद्धरणं विमलधरम्।
कालियशिरगमनं कृतफणिनमनं घातितयमनं मृदुलतरम्।
वल्लभदुःखहरणं निर्मलचरणं अशरणशरणं मुक्तिकरम्।
भज नन्दकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्मपरम्।।८।।

इति श्रीमद्वल्लभाचार्यपादकृत श्रीनन्दकुमाराष्टकम्।



# श्रीगोपालराज स्तोत्रम्

वपुरतुलतमालस्फीतबाहूरुशाखो–
परिधृतगिरिवर्य स्वर्णवर्णैक-गुच्छः।
कटिकृतपरिहस्ता रक्तशाखाग्रहृद्यः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।१।।

रुचिरदृगभिधाने पंकजे फुल्लयन्तं
सुभग वदनगात्रं चित्रचन्द्रं दधानः।
विलसदधरबिम्बघ्रायिनासाशुकौष्ठः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।२।।

चलकुटिलतरभ्रूकार्मुकान्तर्दृगन्त–
क्रमणनिशितबाणं शीघ्रयानं दधानः।
दरयितुमिव राधाधैर्यपारीन्द्रवर्यं
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।३।।

असुलभमिह राधावक्त्रचुम्बं विजान–
न्निव विलसितुमेतच्छाययापि प्रदूरात्।
मुकुरयुगलमच्छं गण्डदम्भेन बिभ्रत्
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।४।।

रुचिनिकरविराजद्दाडिमीपक्वबीज—
प्रकरविजयिदन्तश्रेणिसौरम्यवातैः।
रचितयुवतिचेतः कीरजिह्वातिलौल्यः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।५।।

वचनमधुरसानां पायनैर्गोपरामा-
कुलमुरुधृतधामाप्युन्मदी कृत्य कामम्।
अभिमतरतिरत्नान्याददानस्ततो द्राक्
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।६।।

कुवलयनिभभा कौंकुमद्रावपुण्ड्रं
दधदिव घनषण्डे निश्चलच्चञ्चलाग्रम्।
रचयितुमिव साध्वीकीर्तिमुग्धालिभीतिं
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।७।।

श्रवणमदनरज्जू सज्जयँल्लज्जिराधा-
नयनचलचकोरौ बन्धुमुत्कः किशोरौ।
कृतमकरवतंसस्निग्ध चन्द्रांशुचारः
प्रतपति गिरिपट्टे सुष्ठ गोपालराजः।।८।।

युवतिकरणरत्नव्रातमाच्छिद्यनेत्र—
भ्रमणपटुभटैस्तं न्यस्य हृत्सौधमध्ये।
गरुडमणिकवाटेनोरसाधुष्य हृष्टः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।६।।

त्रिवलिललिततुन्दस्यन्दिनाभीह्रदोद्य-
तनुरुहततिसर्पीमत्र बिभ्राण उग्रम्।
युवतिपतिभयाखुग्रासनायेव सद्यः।
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।१०।।



मरकतकृतरम्भागर्वसर्वंकषोरु
द्वयमुरुरसधामप्रेयसीनां दधानः।
स्फुरदविरलपुष्टश्रोणि भारातिरम्यः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।११।।

मदनमणिवरालीसंपुटक्षुल्लजानु-
द्वयसुललितजंघामञ्जुपादाब्जयुग्मः।
विविधवसनभूषाभूषितांगः सुकण्ठः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।१२।।

कलितवपुरिव श्रीविट्ठलप्रेमपुञ्जः
परिजनपरिचर्याधैर्यपीयूषपुष्टः।
द्युतिभरजितमाद्यन्मन्मथोद्यत् समाजः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।१३।।

विविधभजनपुष्पैरिष्टनामानि गृह्णन्
पुलकिततनुरिह श्रीविट्ठलस्योरुसख्यैः।
प्रणयमणिसरं स्वं हन्त तस्मै ददानः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः।।१४।।

गिरिकुलपतिपट्टोल्लासिगोपालराज—
स्तुतिविलसितपद्यान्युद्भटप्रेमदानि।
नटयति रसनाग्रे श्रद्धया निर्भरं यः।
स सपदि लभते तत्प्रेमरत्नं प्रसादम्।।१५।।

इति श्रीमद्रघुनाथदासगोस्वामी-विरचित-स्तवावल्यां
श्रीगोपालराज स्तोत्रं सम्पूर्णम्

श्रीमज्जीव गोस्वामी कृत

# श्रीगोपालाष्टकम्

।। श्रीश्रीगोपालाय नमः।।

नव नीरद नीलिम चौर तनुं।
परिचारक वाञ्छित कल्पतरुम्।।
चतुरानन सेवित पादयुगम्।
प्रणमामि हरिं ब्रजराजसुतं।।१।।

शिशु गोपगणावृत वेणुकरं।
धृत शंख रथांग गदाकमलम्।।
वृषभानुसुतोष्ठ सुधारसपम्।
प्रणमामि हरिं ब्रजराजसुतम्।।२।।

वनमाल्यविभूषित दैत्यरिपुम्।
परिबद्धसुपिच्छ विचित्रशिखम्।।
मणिकुण्डलमण्डितगण्डयुगम्।
प्रणमामि हरिं ब्रजराजसुतम्।।३।।

ब्रजगोपसुताकुचकुम्भशमं।
यमुनाजलकुन्तलहर्षह्रदम्।।



सरसीरुहलोचन चन्द्रमुखम्।
प्रणमामि हरिं ब्रजराजसुतम्।।४।।

मधुसूदन माधव विश्वगतिम्।
गजराजविराजित मन्दगतिम्।।
तनुमध्य सुशोभित पीतपटं।
प्रणमामि हरिं ब्रजराजसुतम्।।५।।

गरुडध्वजमच्युतमब्धिलयं।
करुणानिधि धार्मिक सर्वधरं।।
परमेश्वर कारण तत्त्वविदं।
प्रणमामि हरिं ब्रजराजसुतम्।।६।।

नव कार्मुकतारण यज्ञभुजम्।
जनमोहनमादिमनन्तगुणम्।।
मुरलीधर यादव लोकगुरुम्।
प्रणमामि हरिं ब्रजराजसुतम्।।७।।

धरणीधर केशव पुण्यमयं।
जगदीश जनार्दन देववरं।।
पुरुषोत्तम वामन दुष्टहरं।
प्रणमामि हरिं ब्रजराजसुतम्।।८।।

इति श्रीमज्जीवगोस्वामी कृत श्रीगोपालाष्टकम्।

(इस स्तोत्र की एकमात्र प्रति संस्थान में संरक्षित है)

# श्रीगोपालदेवाष्टकम्

मधुर-मृदुल-चित्तः प्रेममात्रैक-वित्तः
स्वजन-रचित-वेषः प्राप्त-शोभा-विशेषः।
विविध-मणिमयालंकारवान्सर्वकालं
स्फुरतु हृदि स एव श्रीलगोपालदेवः।।१।।

निरुपम-गुण-रूपः सर्व-माधुर्य-भूपः
श्रित-तनुरुचि-दास्यः कोटिचन्द्र-स्तुतास्यः।
अमृत-विजयि-हास्यः प्रोच्छलच्चिल्लि-लास्यः
स्फुरतु हृदि स एव श्रीलगोपालदेवः।।२।।

धृत-नव-परभागः सव्य-हस्त-स्थितागः।
प्रकटित-निजकक्षः प्राप्त-लावण्यलक्षः।
कृत-निज-जन-रक्षः प्रेमविस्तारदक्षः।
स्फुरतु हृदि स एव श्रीलगोपालदेवः।।३।।

क्रम-वलदनुराग-स्वप्रियापांग-भाग
ध्वनित-रसविलास-ज्ञान-विज्ञापि-हासः।
स्मृत-रतिपति-यागः प्रीति-हंसी-तड़ागः
स्फुरतु हृदि स एव श्रीलगोपालदेवः।।४।।



मधुरिम-भर-मग्ने भात्यसव्येऽवलग्ने
त्रिवलिरलसवत्त्वात् यस्य पुष्टानतत्वात्।
इतरत इह तस्या मार-रेखेव रस्या
स्फुरतु हृदि स एव श्रीलगोपालदेवः।।५।।

वहति वलितहर्षं वाह्यंश्चानुवर्षं
भजति च स्वगणं स्वं भोजयन् योऽर्पयन स्वयम्
गिरि-मुकुट मणिं श्रीदामवन्मित्रता-श्रीः
स्फुरतु हृदि स एव श्रीलगोपालदेवः।।६।।

अधिधरमनुरागं माधवेन्द्रस्य तन्वं-
स्तदमल-हृदयोत्थां प्रेमसेवा विवृण्वन्
प्रकटित-निजशक्तया वल्लभाचार्य-भक्त्या
स्फुरतु हृदि स एव श्रीलगोपालदेवः।।७।।

प्रतिदिनमधुनापि प्रेक्ष्यते सर्वदापि
प्रणय-सुरस-चर्या यस्य वर्यासपर्या।
गणयतुकति भोगान् कः कृतीतत्प्रयोगान्
स्फुरतु हृदि स एवं श्रीलगोपालदेवः।।८।।

गिरिधर-वरदेवस्याष्टकेनेममेव
स्मरति निशिदिने वा यो गृहे वा वने वा।
अकुटिल-हृदयस्य प्रेमदत्वेन तस्य
स्फुरतु हृदि स एव श्रीलगोपालदेवः।।९।।

इति श्रीमद्विश्वनाथचक्रवर्तिपादविरचित स्तवामृतलहर्यां
श्रीगोपालदेवाष्टकं सम्पूर्णम्।

# गोपाल अनुध्यानाष्टकम्

।। श्रीराधाकृष्णाभ्यां नमः।।

सर्वत्रोद्भवपुष्पपुष्पितलतागुल्मद्रुमैरर्चितं,
भ्राम्यद्भृंगमयूरकोकिलशुकैर्हंसादिभिर्नादितम्।
कालिन्दीजललोलचारिविलसत्पद्मोत्तमैः शोभितम्,
सद्वृन्दारकवृन्दवन्दितमहं वृन्दावनं भावये।।१।।
तन्मध्ये मणिरत्नभूमिविलसद्रत्नस्रवैः पादपैः
कल्हारोत्पलकंजचार्यनिलगैस्तद्धूलिभिर्धूसरा।
सूर्य्याणामयुतप्रभासुरचितैर्द्वारैश्चतुर्भिर्युता,
मायाकालविवर्ज्जिता प्रकृतिजैष्षद्भिर्विकारैस्तथा।।२।।
तन्मध्ये मणिमण्डपं सुरुचिरं चित्रैर्वितानैर्युतं,
मुक्तादामविभूषितं सुरवरैराराधनीयं सदा।
तत्रैवाखिललोकवन्दितमहत्कल्पद्रुमं सुप्रभम्,
नाना रत्नफलोज्ज्वज्वलंकिसलैच्छायाद्भुतं भावये।।३।।
तन्मूले मणिरत्नजातघटितं सिंहासने भास्वरम्,
मुक्तादामविभूषितेन मणिमच्छत्रेन संशोभितम्।
तन्मध्येऽष्टदलाकृतौ मणिगणैर्सूर्यायुताभैर्युते,
पद्मे देववरार्चिते बहुमते कृष्णश्च राधाम्भजे।।४।।

दिव्यम्बर्हावतंस नवघन रुचिरं विद्युदाभासवासं,
कस्तूरी भालदेशं सुजलजनयनं कुण्डलाक्रान्तगण्डम्।
नासाग्रे चारुमुक्तं मृदुतर सुधयावेणुरवं पूरयन्तम्।
वन्दे कृष्णं त्रिभंगं मणिगणरचितैर्भूषणैर्भूषितांगम्।।५।।
तद्वामांगेनुरूपां वृषरवितनयां तप्तहेमाभकान्तिम्।
नानालंकार युक्तान्मणिगणखचितां नीलकौशेयवासां।
कान्तो यान्ते मुखाब्जे सुसुरभिरचितां वीटिकामर्पयन्तीं,
वन्दे सौन्दर्य्यसारां सकलगुणयुतां केशवे न्यस्त दृष्टिं।।६।
नानावर्णतनुप्रभाअभिगता दिव्याम्बरा गोपिका,
नानावर्णमणिप्रवालरचितैराभूषणैः भूषिताः।
नाना भोगपदार्थभाजनकरास्तन्न्ययस्तबुद्धीक्षणाः,
तत्सेवाभिरताः सखीगणवृताः सख्यस्तथा भावये।।७।।
तद्वाह्ये नवगोपबालकवराः दिव्यांगभूषाम्बराः,
वेण्याद्याहलशृंगवेत्रसहितास्तन्न्यस्तबुद्धीक्षणाः।
तद्वाह्ये किल कामधेनुकुलजा हुंकार शब्दान्विताः,
गावोप्याभरणान्विताः परिवृतस्तन्न्यस्त बुद्धीक्षणाः।।८।।
तद्वाह्ये दिशि पूर्वके विधिशिवसेन्द्रादि देवा वराः,
दक्षांगे ऋषयश्च पश्चिमगतां कौमारवेशं विभो।
वामेश्च सरसांगणा गति परां गन्धर्वविद्याधरा–
श्चोर्द्धध्येयमतंद्दृतं भगवतो वीणाधरं नारदं।।९।।
जपादौ चिन्तयेद्देवं परब्रह्मं सनातनम्।
कृष्णं कमलपत्राक्षं संसृतेर्मुक्तिमाप्नुयात्।।१०।।

इति श्रीमन्निम्बार्क सम्प्रदायाचार्यानुकूल
श्रीमद्गोपाल अनुध्यानाष्टकं सम्पूर्णम्।

# श्रीबालगोपाल दशकम्

।। श्रीगोपालाय नमः ।।

तीरपयोनिधिवृक्षनिवासं, हास्यकटाक्षज वंशनिनादं।
श्यामलसुन्दर नित्यविलासं, तं प्रणमामि च बालगोपालम्।।१।।

गोपवधूजनमोहनकारं, अंगंगतिरतिरंग विहारं।
गोपवधूजन सेवितपादं, तं प्रणमामि च बालगोपालम्।।२।।

गोगिरिधारण गोकुलतारण, चन्दनचर्च्चित लोचनभारं।
नीलकलेवर शोभितहारं, तं प्रणमामि च बालगोपालम्।।३।।

यादव माधव केशव शौरे, श्रीधर भूधर कृष्ण मुरारे।
तारय, तारय हर मे पापं, तं प्रणमामि च बालगोपालम्।।४।।

केलिकुतूहल कुन्तल शोभं, शैशव वामन लास्य विलासं।
कंसनिपातित मुष्टिकघातं, तं प्रणमामि च बालगोपालम्।।५।।

श्रीब्रजराजसुनन्दकुमारं, शुकनारदसंसेवित पादम्।
जननिविराजित केशवचित्तं, तं प्रणमामि च बालगोपालम्।।६।।



श्रीमधुसूदन बाल्य विचित्रं, गोपबधूजनसेवित चित्तं।
व्याजनचित्तनिषेवितगात्रं, तं प्रणमामि च बालगोपालम्।।७।।

कंसनिसूदन केशिविनाशं , तालवनेन च धेनुकनाशम्।
देवकीनन्दन सुन्दर कृष्णं, तं प्रणमामि च बालगोपालम्।।८।।

कुण्डलमण्डित गण्ड कपोलं, कण्ठविभूषितनीलविलोचम्।
उज्ज्वलकंकणबाहुमृणालं, तं प्रणमामि च बालगोपालम्।।९।।

गो गिरिधारण मे वरदानं, काम्यमनुरत सिद्धिददानम्।
जय रघुनन्दन सुन्दर कृष्णं, तं प्रणमामि च बालगोपालम्।।१०।।

# श्रीगोपाल नीराजन स्तव

।। श्रीगोविन्दाय नमः ।।

जयदेव जयदेव
वंदे गोपालम्।
मृगमद शोभित भालं, मृगमद शोभितभालं।
करुणाकल्लोलं, (जय) जयदेव जयदेव।।१।।

निर्गुण सगुणाकारं, संहृतभूमारं
(जय) संहृतभूमारम्।
मुरहर नन्दकुमारं, मुरहर नन्दकुमारम्।
मुनिजन सुखकारं, (जय) जयदेव जयदेव।।२।।

वृन्दावन संचारं, कौस्तुभमणिहारं
(जय) कौस्तुभमणिहारम्।
करुणापारावारं, करुणापारावारं,
गोवर्धनधारम्, (जय) जयदवे जयदेव।।३।।

कम्बुग्रीवं कौस्तुभमणि कंठाभरणं,
(जय) मणिकण्ठाभरणं।
श्रीवत्सादिक वक्षो, श्रीवत्सादिक वक्षो,
लम्बित वनमालां, (जय) जयदेव जयदेव।।४।।



वाहुविभूषित युगलं, करतलधृत वेणुं
(जय) करतल धृतवेणुम्।
त्रिवली शोभितमुदरं, त्रिवली शोभितमुदरम्।
नव जलधर नीलम्, (जय) जयदेव जयदेव।।५।।

कुंचित कुंतल नीलं शरदेंदु वदनं,
(जय) शरदेंदु वदनम्।
मणिगण मण्डित कुण्डल, मणिगण मण्डित कुण्डल,
राजित श्रुति युगलम्, (जय) जयदेव जयदेव।।६।।

विकसेन्दीवर नयनं, विलसितभ्रूयगुलं
(जय) विलसित भ्रूयगुलम्।
बिम्बाधरमणि सुन्दर, बिम्बाधरमणि सुन्दर।
नासामणि लोलम्, (जय) जयदेव जयदेव।।७।।

मुरलीवाद्यं लीला, सप्त स्वर गीतं
(जय) सप्त स्वर गीतम्।
जलचर स्थलचर वनचर, जलचर स्थलचर वनचर।
रंजित संगीतम्, (जय) जयदेव जयदेव।।८।।

स्तम्भित यमुना तोयं, अगणित तव चरितं
(जय) अगणित तव चरितम्।
गोपीजन मनमोहन, गोपीजन मनमोहन।
यत्र श्रीकान्तम्, (जय) जयदेव जयदेव।।६।।

रासक्रीडामण्डित वेष्टित व्रजललनं
(जय) वेष्टित व्रज ललनम्।
मध्ये ताण्डव लास्यं, मध्ये ताण्डव लास्यम्।
पंकज दल नयनम्, (जय) जयदेव जयदेव ।।१०।।

कुसुमाकारि सुरंजित मन्दस्मित वदनं,
(जय) मन्दस्मित वदनम्।
कालिय फणिवरदमनं, कालिय फणिवर दमनम्।
पक्षेश्वर गमनम्, (जय) जयदेव जयदेव।।११।।

अभिनवनीताहारं, करतल दधि गोलं
(जय) करतलदधि गोलम्।
लीला नटवर खेलन, लीला नटवर खेलन।
धृतकांचलं शीलम्, (जय) जयदेव जयदेव।।१२।।

निजजन रक्षणशीलं, विदलितरिपुदलनं
(जय) विदलित रिपुदलनम्।
भगवन्तं जनपालं, भगवन्तं जनपालम्।
वन्दे गोपालम्, (जय) जयदेव जयदेप।।१३।।

किंकिणि मेखलमध्ये, पीताम्बर वसनं
(जय) पीताम्बर वसनम्।
सिञ्जित नूपुर मधुरं, सिञ्जित नूपुर मधुरम्।
विकसित पदयुगलम्, (जय) जयदेव जयदेव।।१४।।

गोगोपीपरिवेष्टित, यमुनातट संस्थं
(जय) यमुनातट संस्थम्।
व्यासाभयदं सुखदं व्यासाभयदं सुखदम्।
भुवनत्रय पालम्। (जय) जयदेव जयदेव
वन्दे गोपालम्, (जय) जयदेव जयदेव।।१५।।

इति श्रीव्यास (?) विरचितं गोपालं नीराजन स्तवनं सम्पूर्णम्।।

श्रीशुभ संवत् १६१४ ज्येष्ठ शुल्क १० भौमे लि० पं० रामजी रामेण अनूपशहर मध्ये श्रीभागीरथि तीरे गिरिधारिणो मंदिरे।



संस्थान के संस्थापक–अध्यक्ष
डॉ. रामदास गुप्त
(9-8-1937 —26-7-1997)

# वृन्दावन शोध संस्थान

## • एक परिचय •

वृन्दावन शोध संस्थान की स्थापना डॉ. रामदास गुप्त के सद्प्रयत्नों से सन् १९६८ में हुई थी। वृन्दावन के लोई बाजार की एक पुरानी धर्मशाला के दो कक्षों में आरम्भ हुआ यह संस्थान अब रमणरेती में आकर्षक हरीतिमा के बीच गुलाबी पत्थर के एक भव्य भवन में स्थित है। संस्थान का संचालन वृन्दावन शोध समिति द्वारा होता है जो एक पंजीकृत समिति है। संस्थान मुख्यतः केन्द्र तथा उत्तरप्रदेश सरकारों द्वारा वित्तपोषित है और इसकी शासी परिषद् में उनका समुचित प्रतिनिधित्व है।

संस्थान में लगभग २७००० हस्तलिखित ग्रन्थ संग्रहीत हैं जिनमें संस्कृत, हिन्दी, बँगला, ओड़िया, पंजाबी, गुजराती , तमिल, तेलुगु, मलयालम आदि सभी भारतीय भाषाओं तथा लिपियों के ग्रन्थ शामिल हैं। लगभग २१००० ग्रन्थों के कैटलॉग प्रकाशित हो चुके हैं तथा शेष पर काम चल रहा है। विषय की दृष्टि से इस ग्रन्थ-संग्रह में अद्‌भुत विविधता है। धर्म, दर्शन, कर्मकाण्ड, काव्य के अतिरिक्त ज्योतिष, आयुर्वेद, शिल्पशास्त्र, शालिहोत्र, कामशास्त्र, रत्नशास्त्र आदि के ग्रन्थ भी इस संग्रह में उपलब्ध हैं। समय–समय पर इस ग्रन्थराशि की जाँच में ऐसे ग्रन्थ मिलते रहते हैं जिनका नाम या जिनके रचनाकार का नाम या दोनों ही अभी तक अज्ञात रहे हैं। ग्रन्थों के अतिरिक्त अन्य अनेक महत्त्वपूर्ण दस्तावेज, यथा शाही फ़रमान, खाता बही, पत्राचार आदि भी संस्थान में सुरक्षित हैं। हस्तलिखित सामग्री के रख–रखाव तथा संरक्षण के लिए प्रशिक्षित व्यक्तियों द्वारा चलायी जा रही एक संरक्षण प्रयोगशाला,

माइक्रोफ़िल्मिंग के अत्याधुनिक उपकरण, फोटोग्राफी अनुभाग आदि शोधार्थियों की सहायता के लिये संस्थान में अनवरत कार्यरत हैं। शोधार्थियों की सुविधा के लिये संस्थान में एक सन्दर्भ पुस्तकालय तथा एक अतिथिशाला भी है। हस्तलिखित ग्रन्थादि के अतिरिक्त संस्थान में एक ब्रजसंस्कृति संग्रहालय भी स्थित है जिसमें ब्रज की कला और शिल्प सम्बन्धी सामग्री प्रदर्शित है।

भारतीय इतिहास, साहित्य तथा संस्कृति से सम्बन्धित किसी भी विषय पर शोध तथा प्रकाशन संस्थान के कार्यक्षेत्र में शामिल है यद्यपि ब्रजक्षेत्र के ऊपर इसका विशेष बल है। तदनुसार ब्रजमण्डल की साहित्यिक, सांस्कृतिक, धार्मिक, ऐतिहासिक एवम् पुरातात्विक निधि का संग्रह, संरक्षण, अध्ययन, शोध और प्रकाशन संस्थान का मुख्य उद्देश्य है। संस्थान डॉ. बी. आर. अम्बेडकर विश्वविद्यालय, आगरा द्वारा हिन्दी और संस्कृत में पी-एच. डी. की उपाधि हेतु शोध-कार्य के लिये शोध-केन्द्र के रूप में मान्यता प्राप्त है और संस्थान में अनेक देशी-विदेशी विद्वानों ने शोध कार्य किये हैं।

सम्प्रति संस्थान एक महत्त्वाकांक्षी प्रकाशन योजना कार्यान्वित करने में संलग्न है और आगामी वर्षों में कई महत्त्वपूर्ण ग्रन्थों के प्रकाश में आने की आशा है।

संस्थान विद्वानों और जन-साधारण के आशीर्वाद तथा सहयोग की कामना करता है तथा समानधर्मी संस्थाओं के साथ मिलकर भारतीय संस्कृति की सेवा करने का इच्छुक है। संस्थान का सभी से एकमात्र निवेदन है, "सांस्कृतिक धरोहर की रक्षा में हमारी सहायता करें।"

संस्थान को दान या चन्दे के रूप में दी जाने वाली राशि भारतीय आयकर अधिनियम १९६१ की धारा ८० जी के अन्तर्गत करमुक्त है।


**वृन्दावन शोध संस्थान**

रमणरेती, वृन्दावन–281121, उ. प्र., भारत

फ़ोन–(0565) 443828 • फ़ैक्स–(0565) 442476






# वृन्दावन शोध संस्थान के प्रकाशन

## Publications of the Vrindavan Research Institute

### CATALOGUES

1. A Catalogue of Sanskrit Manuscripts in the Vrindavan Research Institute, Part-I, Rs. 95.00
2. A Catalogue of Sanskrit Manuscripts in the Vrindavan Research Institute, Part-II, Rs. 170.00
3. A Catalogue of Sanskrit Manuscripts in the Vrindavan Research Institute, Part III, Rs. 125.00
4. A Catalogue of Sanskrit Manuscripts in the Vrindavan Research Institute, Part IV, Rs. 175.00
5. A Catalogue of Sanskrit Manuscripts in the Vrindavan Research Institute, Part V, Rs. 225.00
6. A Catalogue of Hindi Manuscripts in the Vrindavan Research Institute, Part I, Rs. 65.00
7. A Catalogue of Hindi Manuscripts in the Vrindavan Research Institute, Part II, Rs. 180
8. A Catalogue of Bengali Manuscripts in the Vrindavan Research Institute, Rs. 150.00
9. A Catalogue of Manuscripts Microfilmed by the VRI, Part I, Rs. 85.00
10. A Descriptive Catalogue of Punjabi Manuscripts in the VRI, Rs. 175.00

• Note - A set of five parts of the Catalogues of Sanskrit Manuscripts is available at a concesssional price of Rs. 650 only.

# शोधपरक पुस्तकें

1. ब्रज की रासलीला
   लेखक–प्रभुदयाल मीतल — रु. 100.00
2. दशश्लोकी (सटीक)
   सम्पादक–डॉ. कमलेश पारीक — रु. 30.00
3. केवलराम कृत रासमान के पद
   सम्पादक–एलन एंट्विसिल — रु. 30.00
4. Rasman Ke Pad
   Editor-A. W. Entwistle — Rs. 45.00
5. स्वामी चरणदास कृत रहस्य दर्पण एवं रहस्य चन्द्रिका
   सम्पादक–डॉ. रामदास गुप्त तथा डॉ. शरणबिहारी गोस्वामी
   रु. 45.00 (पेपर बैक) रु. 60.00 (सजिल्द)
6. रसिक कर्णाभरण (लीला) — रु. 40.00 (पेपर बैक)
   सम्पादक–डॉ. नरेशचन्द्र बंसल — 60.00 (सजिल्द)
7. स्मरण दर्पण — रु. 25.00 (पेपर बैक)
   सम्पादक–गोपालचन्द्र घोष — रु. 35.00 (सजिल्द)
8. यमुना एवं यमुनाष्टक — रु. 110.00 (पेपर बैंक)
   सम्पादक–वृन्दावन बिहारी गोस्वामी — रु. 125.00 (सजिल्द)
9. छन्दः कौस्तुभः — रु. 150.00 (पेपर बैक)
   सम्पादक–डॉ. कमलेश पारीक — रु. 175.00 (सजिल्द)
10. मथुरा माहात्म्य — रु. 100.00 (पेपर बैक)
    सम्पादक–डॉ. उमा भास्कर — रु. 150.00 (सजिल्द)
11. Vrindavana in Vaishnava Literature
    by Dr. Maura Corcoran — Rs. 375.00
12. ब्रज की लोक–कथाएँ — रु. 80.00 (पेपर बैक)
    लेखक–डॉ. ब्रजभूषण चतुर्वेदी — रु. 90.00 (सजिल्द)
13. An Early Testamentary Document in Sanskrit
    by Tarapada Mukherjee and J. C. Wright — Rs. 10.00
14. Vaishnava Tilakas by A. W. Entwistle — (under reprint)
15. श्रीगोपाल पाठावली
    सम्पादक–चन्द्रधर त्रिपाठी तथा गोपालचन्द्र घोष
    रु. 40.00 (पेपर बैक) रु. 100.00 (सजिल्द)



प्राचीन ग्रन्थों तथा अन्य सांस्कृतिक निधियों के
संरक्षण में तत्पर

## वृन्दावन शोध संस्थान


रमण रेती, वृन्दावन—२८११२१ (उ. प्र.) भारत


## Vrindavan Research Institute


Raman Reti, Vrindavan-281121 (U. P.) INDIA



• Chitralekhaa 442415